# ॥ गुरुस्तोत्रम् ॥

अथ गुरुस्तोत्रम् ।

बृहस्पतिः सुराचार्यो दयावान् शुभलक्षणः ।
लोकत्रयगुरुः श्रीमान्सर्वज्ञः सर्वकोविदः ॥ १॥

सर्वेशः सर्वदाऽभीष्टः सर्वजित्सर्वपूजितः ।
अक्रोधनो मुनिश्रेष्ठो नीतिकर्ता गुरुः पिता ॥ २॥

विश्वात्मा विश्वकर्ता च विश्वयोनिरयोनिजः ।
भूर्भुवःसुवरों चैव भर्ता चैव महाबलः ॥ ३॥

पञ्चविंशतिनामानि पुण्यानि नियतात्मना ।
वसता नन्दभवने विष्णुना कीर्तितानि वै ॥ ४॥

यः पठेत् प्रातरुत्थाय प्रयतः सुसमाहितः ।
विपरीतोऽपि भगवान्प्रीतो भवति वै गुरुः ॥ ५॥

यश्छृणोति गुरुस्तोत्रं चिरं जीवेन्न संशयः ।
बृहस्पतिकृता पीडा न कदाचिद्भविष्यति ॥ ६॥

इति गुरुस्तोत्रं सम्पूर्णम् ।

॥ श्रीगुरुस्तोत्रम् कुब्जिकातन्त्रोक्त ॥

ॐ नमस्तुभ्यं महामन्त्रदायिने शिवरूपिणे ।
ब्रह्मज्ञानप्रकाशाय संसारदुःखतारिणे ॥ १॥

अतिसौम्याय दिव्याय वीराय ज्ञानहारिणे ।
नमस्ते कुलनाथाय कुल कौलिन्यदायिने ॥ २॥

शिवतत्त्वप्रबोधाय ब्रह्मतत्त्वप्रकाशिने ।
नमस्ते गुरवे तुभ्यं साधकाभयदायिने ॥ ३॥

अनाचाराचारभावबोधाय भक्तहेतवे ।
भावाभावविनिर्मुक्ताय मुक्तिदात्रे नमो नमः ॥ ४॥

नमस्ते शम्भवे तुभ्यं दिव्यभावप्रकाशिने ।
ज्ञानानन्दस्वरूपाय विभवाय नमो नमः ॥ ५॥

शिवाय शक्तिनाथाय सच्चिदानन्दरूपिणे ।
कामरूपाय कामाय कालकेलिकलात्मने ॥ ६॥

कुलपूजोपदेशाय कुलाचारस्वरूपिणे ।
आरक्तलसच्छक्तये समभागविभूतये ॥
नमस्तेऽस्तु महेशाय नमस्तेऽस्तु नमो नमः ॥७॥

इदं स्तोत्रं पठेन्नित्त्यं साधको गुरुदिङ्मुखः ।
प्रातरुत्थाय देवेशि! ततो विद्या प्रसीदति ॥ १॥

॥ गुरुस्तोत्र सार्थ ॥

अखण्डमण्डलाकारं व्याप्तं येन चराचरम् ।
तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः ॥ १॥

अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया ।
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥ २॥

गुरुर्ब्रह्मा गुरुर्विष्णुः गुरुर्देवो महेश्वरः ।
गुरुरेव परं ब्रह्म तस्मै श्रीगुरवे नमः ॥ ३॥

स्थावरं जङ्गमं व्याप्तं यत्किञ्चित्सचराचरम् ।
तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः ॥ ४॥

चिन्मयं व्यापि यत्सर्वं त्रैलोक्यं सचराचरम् ।
तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः ॥ ५॥

सर्वश्रुतिशिरोरत्नविराजितपदाम्बुजः ।
वेदान्ताम्बुजसूर्यो यः तस्मै श्रीगुरवे नमः ॥ ६॥

चैतन्यश्शाश्वतश्शान्तः व्योमातीतो निरञ्जनः ।
बिन्दुनादकलातीतः तस्मै श्रीगुरवे नमः ॥ ७॥

ज्ञानशक्तिसमारूढः तत्त्वमालाविभूषितः ।
भुक्तिमुक्तिप्रदाता च तस्मै श्रीगुरवे नमः ॥ ८॥

अनेकजन्मसम्प्राप्तकर्मबन्धविदाहिने ।
आत्मज्ञानप्रदानेन तस्मै श्रीगुरवे नमः ॥ ९॥

शोषणं भवसिन्धोश्च ज्ञापनं सारसम्पदः ।
गुरोः पादोदकं सम्यक् तस्मै श्रीगुरवे नमः ॥ १०॥

न गुरोरधिकं तत्त्वं न गुरोरधिकं तपः ।
तत्त्वज्ञानात् परं नास्ति तस्मै श्रीगुरवे नमः ॥ ११॥

मन्नाथः श्रीजगन्नाथः मद्गुरुः श्रीजगद्गुरुः ।
मदात्मा सर्वभूतात्मा तस्मै श्रीगुरवे नमः ॥ १२॥

गुरुरादिरनादिश्च गुरुः परमदैवतम् ।
गुरोः परतरं नास्ति तस्मै श्रीगुरवे नमः ॥ १३॥

त्वमेव माता च पिता त्वमेव । त्वमेव बन्धुश्च सखा त्वमेव
त्वमेव विद्या द्रविणं त्वमेव । त्वमेव सर्वं मम देवदेव ॥ १४॥

॥ इति श्रीगुरुस्तोत्रम् ॥